अंक ६



# संस्कृत-पाठ-माला।

( संस्कृत भाषाका अध्ययन करनेका सुगम उपाय। )



## षष्ठ भाग।

लेखक और प्रकाशक।

श्रीपाद दामोदर सातवळेकर,

स्वाध्याय मंडल, औंध (जि. सातारा)



प्रथम वार २०००

संवत् १९८२, शके १८४७, सन १९२५

मूल्य ।≈) पांच आने।

# स्वाध्यायके ग्रंथ ।

## [ १ ] यजुर्वेदका स्वाध्याय ।

( १ ) य. अ. ३० की व्याख्या । नरमेध ।
मनुष्योंकी सच्ची उन्नतिका सच्चा साधन । १ )

( २ ) य. अ. ३२ की व्याख्या । सर्वमेध ।
" एक ईश्वरकी उपासना । " मू. ॥ )

( ३ ) य. अ. ३६ की व्याख्या । शांतिकरण ।
" सच्ची शांतिका सच्चा उपाय । " मू.॥ )

## [ २ ] देवता-परिचय-ग्रंथमाला ।

( १ ) रुद्र देवताका परिचय । मू. ॥ )
( २ ) ऋग्वेदमें रुद्र देवता । मू. ॥=)
( ३ ) ३३ देवताओंका विचार । मू. ≡ )
( ४ ) देवताविचार । मू. ≡ )
( ५ ) वैदिक अग्नि विद्या । मू. १॥ )

## [ ३ ] योग-साधन-माला ।

( १ ) संध्योपासना । मू. १॥ )
( २ ) संध्याका अनुष्ठान । मू. ॥ )
( ३ ) वैदिक-प्राण-विद्या । मू. १ )
( ४ ) ब्रह्मचर्य । मू. १। )
( ५ ) योगसाधन की तैयारी । मू. १ )
( ६ ) योग के आसन । मू. २ )
( ७ ) सूर्यभेदन व्यायाम मू. ।= )



अंक ६

# संस्कृत-पाठ-माला।

[ संस्कृत भाषाका अध्ययन करनेका सुगम उपाय। ]

## षष्ठ भाग।



लेखक और प्रकाशक।

**श्रीपाद दामोदर सातवळेकर,**

स्वाध्यायमंडल, औंध ( जि. सातारा. )






**प्रथमवार १०००**



संवत् १९८२, शक १८४७, सन १९२५.

**मूल्य ।-) पांच आने।**

# समास।

संस्कृतमें "समास" का प्रकरण विशेष महत्त्व का है। इस समास विषयका प्रारंभ इस भागमें किया है। पाठक यदि इस भाग का विशेष अभ्यास करेंगे, तो उनको समासोंके साथ थोडासा परिचय हो जायगा।

आगेके भागोंमें यह समास प्रकरण क्रमशः समाप्त किया जायगा।

इस भागमें जो संस्कृत के वाक्य दिये हैं उनका विशेष अभ्यास पाठक करें तथा फुरसत के समय उनको वारंवार पढते रहें।

ऐसा करनेसे ही अत्यंत लाभ हो सकता है।

स्वाध्यायमंडल,
औंध (जि. सातारा)
११।९।२९

लेखक,
श्रीपाद दामोदर सातवळेकर.

मुद्रक—रा. रा. चिंतामण सखाराम देवळे, मुंबईवैभव प्रेस, सर्व्हंट्स ऑफ इंडिया सोसायटीज् होम, सँढर्स्ट रोड, गिरगांव-मुंबई.

प्रकाशक—श्रीपाद दामोदर सातवळेकर, स्वाध्यायमंडल, औंध (जि. सातारा).




ॐ

# संस्कृत-पाठ-माला।

## षष्ठ भाग।

### पाठ १

यदि आपका इस समयतकका अभ्यास ठीक हो गया है तो निम्न लिखित सरल संस्कृत आप आसानीसे समझ सकते हैं—

ततो दशरथो मिथिलामुपेयिवान्। जनकश्च पूजां कल्पयित्वैनमुवाच। दिष्ट्या प्राप्तोऽसि सह वसिष्ठेन। ददामि सीतां रामायोर्मिलां लक्ष्मणाय च।

विश्वामित्रश्चोवाच। राजन्! सदृशो धर्मसंबन्धो रामस्य सीतया सह। अन्यच्च यवीयसो जनकभ्रातुः कुशध्वजस्यापि सुताद्वयमस्ति। भरतशत्रुघ्नयोः पत्न्यर्थं सुताद्वयमपि योग्यम्।

वसिष्ठेनापि तदनुमतम्। जनकस्तु प्राञ्जलिरुवाच। धन्यं मन्ये मम कुलम्।

यत उभावपि मुनिपुंगवौ युवामस्माकं कुलसंबंधं सदृशं ज्ञापयतः।

एकेनैवाह्ना चत्वारो राजपुत्राः चतसृणां राजपुत्रीणां पाणीन् गृह्णन्तु ।

ततः सर्वाभरणभूषितां सीतां समानीयाग्नेः पुरस्तात्संस्थाप्य राजा राममब्रवीत् ।—

मे सुतेयं सीताऽद्य तव सहधर्मचारिणी प्रतीच्छैनां पतिव्रतां छायामिवानुगामिनीम् ।

ततः सर्वे महर्षयः साधु साध्वित्यूचुः । लक्ष्मणं भरतं शत्रुघ्नं च तथैव क्रमेणोर्मिलया मांडव्या श्रुतकीर्त्या च सह संयोजयामासुः । ते अग्निं त्रिः परिक्रम्य भार्या ऊहतुः ।

अथ रात्र्यां व्यतीतायां विश्वामित्र आपृष्ट्वारामचंद्रमुत्तरपर्वतं जगाम ।

राजा दशरथोऽपि मिथिलाधिपतिं जनकं पृष्ट्वाऽयोध्यानगरीमाशु प्रस्थितः ।

मार्गे तु क्षत्रियविमर्दनं जामदग्न्यं रामं दशरथो ददर्श । तदा दशरथः प्रांजलिर्भूत्वा ‘ अभयं देहि ’ इति तं प्रार्थयामास ।

अनादृत्य तद्वाक्यं राममेव जामदग्न्यउवाच । पश्याद्यैव मे पराक्रमम् । रामोऽपि धनुः सज्जीकृत्योवाच । ब्राह्मणोऽसि त्वम् । तस्मात्ते प्राणं न हरामि ।

ततो जामदग्न्यो महेन्द्रपर्वतं तपश्चरणं कर्तुं गतः ! रामोऽप्ययोध्यां प्राप्तः ।

पाठक इस पाठको बार बार पढें और कोई संदेह हुआ तो पूर्व भाग में येही वाक्य देखें। वहां येही वाक्य पदच्छेदपूर्वक दिये हैं। अब निम्नलिखित संस्कृत पाठ पढिये—

हे भारत! तस्य वेश्मनो मध्ये नातिमहत् कपाटयुक्तमज्ञातं भूम्याश्च समं बिलं चक्रे। पुरोचनभयादेव संवृतं मुखं व्यदधात्। स अशुभधीः तस्य गृहद्वारि तु सदा वसति।

हे नृप! ते सर्वे पांडवेयाः सायुधाः क्षपां तत्र वसन्ति स्म। दिवा वनाद्वनं मृगयां चरंति स्म च।

हे राजन्! पुरोचनं वंचयन्तोऽविश्वस्ता विश्वस्तवदतुष्टा-स्तुष्टवत्परमविस्मिता ऊषुः।

तस्मात्खनकसत्तमाद्विदुरामात्यादन्यत्र नगरवासिनो नरा एनान्नान्वबोधन्त।

परिसंवत्सरो षितान्सुमनसस्तान्दृष्ट्वा, विश्वस्तानिव संलक्ष्य पुरोचनो हर्षं चक्रे।

तथा पुरोचने हृष्टे अथ कौन्तेयो धर्मविद्युधिष्ठिरो भीमसेनार्जुनावुभौ यमौ च प्रोवाच।

इसको वारंवार पढनेसे पाठक सुगमताके साथ समझ सकते हैं। इसमें कोई कठिनता नहीं है। जो वाक्य नहीं समझा है वह पुनः पुनः पढने और विचार करनेसे समझमें आजायगा। यदि किसी स्थानपर संदेह हुआ तो पूर्व भाग में देख लें। वहां येही वाक्य पदच्छेदपूर्वक दिये हैं, इसलिये उनको देखनेसे सब संदेह निवृत्त हो सकते हैं।

पाठक इसी प्रकार अपनी बुद्धि चलाते रहेंगे तो उनका प्रवेश संस्कृत भाषामें अतिशीघ्र हो जायगा।

अब निम्नलिखित प्रश्नोंका उत्तर संस्कृतमें ही दीजिये—

१ दशरथः कुत्र उपेयिवान् ?

२ दशरथं दृष्ट्वा जनकः किं अवदत् ?

३ तदा विश्वामित्रः किं अब्रवीत् ?

४ राजपुत्राः केषां पाणिग्रहणं अकुर्वन् ?

५ सीतां अग्नेः पुरस्तात्संस्थाप्य राजा किं अब्रवीत् ?

६ रात्र्यां व्यतीतायां विश्वामित्रः कुत्र गतः ?

७ दशरथः अपि कां नगरीं प्रस्थितः ?

८ मार्गे दशरथः कं ददर्श ?

९ तं दशरथः किं अब्रवीत् ?

१० जामदग्न्येन रामेण किं उक्तम् ?

११ तदा रामचंद्रेण किं कृतम् ?

१२ जामदग्न्यः रामः कुत्र गतः ? किं कर्तुं गतः ?

इन प्रश्नोंके उत्तर पाठक संस्कृतमेंही दें। यदि कुछ कठिनता प्रतीत हुई तो यही पाठ देख लें। इसी पाठमें प्रारंभमें जो वाक्य दिये हैं उनको देखनेसे ही इन प्रश्नोंके उत्तर स्वयं दिये जा सकते हैं।

---

## पाठ २

इकारान्त नपुंसकलिंगी शब्दोंके रूप निम्नलिखित रीतिसे होते हैं—

| | |
|---|---|
| १ वारि=जल | ४ वारिणे=जलके लिये |
| ( हे ) वारि=( हे ) जल | ५ वारिणः=जलसे |
| २ वारि=जलको | ६ ,, =जलका |
| ३ वारिणा=जलसे | ७ वारिणि=जलमें |

तत्र कूपे वारि अस्ति=उस कूएमें जल है।

सः वृषभः वारि तत्र पिबति=वह बैल जल वहा पीता है।

अहं वारिणा स्नानं करोमि=मैं जलसे स्नान करता हूं।

सः वारिणे कूपं गच्छति=वह जलके लिये कूएके पास जाता है।

सः तस्मात् वारिणः मंडूकः अत्र आगच्छति=वह उस जलसे मेंडक यहां आता है।

तस्य वारिणः वर्णं पश्य=उस जलका रंग देख।

### वाक्य।

तव गृहे मंचकस्य उपरि मया तव पुस्तकं स्थापितं अस्ति। तव पुत्रः अश्वं कदा आरोहति इति त्वं जानासि किम्? शत्रून् निहत्य एव राज्यं प्राप्तुं शक्यं अस्ति न अन्यथा। यदा उपासनेन ईश्वरस्य प्रसादः भवति तदा एव शाश्वतं सुखं भवति इति निश्चयः एव अस्ति। यदा दशरथः अयोध्यां राज्यं

अकरोत् तदा तस्मिन् राष्ट्रे दुष्टः पापी चौरः वा न आसीत्। तत्र सर्वः अपि जनः सुखपूर्णः मुदितः ईश्वरभक्तः च आसीत्।

यथा मूषकः वस्त्रं खादति तथा एव अन्नं अपि खादति एव। यथा मानवः जलं पिबति तथा रसं अपि पिबति एव। सः मनुष्यः आपणं गत्वा आम्रं आनयति सदा खादति च। सः सदा एव आम्रं खादति परंतु कदाचित् अपि न पुस्तकं पठति। तस्मात् नगरात् त्वं कदा अत्र आगतः ?

यः मनुष्यः इंद्रियाणि संयम्य ज्ञाननाशकं पापविचारं त्यजति सः एव महात्मा इति उच्यते। ऋषिः मंत्रविचारं करोति, मुनिः मौनं धारयति, महर्षिः तपः करोति, मनुष्यः भोजनं करोति, योगी योगं आचरति।

यदा वृक्षं कपिः आरोहति तदा त्वं किं करोषि ? कपिः मनुष्यवत् एव सर्वं व्यवहारं करोति परंतु सः पठनं, मननं, विचारं च कर्तुं न समर्थः भवति।

वारिधौ क्षारं जलं भवति, कूपे मधुरं जलं भवति। नदी-जलं कदाचित् क्षारं कदाचित् मधुरं अपि भवति। मम कूपस्य जलं अतीव मधुरं अस्ति न तथा तव कूपस्य।

पुण्यकर्मकर्ता जनः स्वर्गं गच्छति न तथा पापकर्मकर्ता मनुष्यः। अतः त्वं धर्मस्य एव आचरणं सदा कुरु। कदाचित् अपि धर्मस्य विरोधकं पापं न कुरु।

तव गुरोः गृहं कुत्र अस्ति कदा च सः तत्र भवति? मम गुरोः गृहं पुण्यनगरे संस्कृतपाठशालासमीपं एव अस्ति। सः तत्र

प्रातः सायं च भवति एव। दिवसस्य मध्यसमये न भवति। संस्कृतपाठशालां गत्वा शिष्यान् व्याकरणं पाठयति।

यदा मनुष्यः प्राणं धनं च त्यक्त्वा स्वराष्ट्रार्थं युद्धं करोति तदा एव विजयं प्राप्नोति। सर्वस्वत्यागेन विना विजयः अशक्यः एव अस्ति।

युद्धसमये दुन्दुभिः शब्दं करोति, सैनिकः धावति, वीरः शस्त्रं गृहीत्वा अग्रे भवति। एवं सर्वत्र वीर्यं शौर्यं च भवति। तेन विजयः भवति।

ये वाक्य पाठक पढें और इस प्रकार अनेक वाक्य करते रहें। यह अच्छा होगा यदि पाठक विविध वाक्य बनाकर कागजपर लिखते रहेंगे। जो जो शब्द आगये हैं उनका उपयोग करके अनेकानेक वाक्य बनानेसे संस्कृतमें अति शीघ्र गति हो सकती है।

---

## पाठ ३

१ अथ वृद्धस्य राज्ञः दशरथस्य एषा मतिः बभूव, यत् जीवति मयि रामः कथं राजा स्यात्=अब वृद्ध राजा दशरथ की यह बुद्धि हुई, कि ( जीवति मयि ) मेरे जीवित रहते हुए ही राम कैसे राजा होवे ?

२ तं च समुदितैः गुणैः युक्तं समीक्ष्य, सचिवैः सार्धं निश्चित्य च, तस्य यौवराज्यं अमन्यत=उसको श्रेष्ठ गुणोंसे

२

युक्त देखकर और मंत्रियोंके साथ निश्चय कर, उसके यौवराज्यक निश्चय किया।

३ **नाना नागरिकान् पृथक् जानपदान् अपि समानिनाय**=नाना प्रकारके नागरिक और पृथक् पृथक् ( जानपदान् ) देशोंके जन ( अपि ) भी ( समानिनाय ) बुलाये।

४ **ततः सर्वां परिषदं आमन्त्र्य वसुधाधिपः उवाच**=पश्चात् सब ( परिषदं ) सभाको आमंत्रण देकर ( वसुधा–अधिपः ) राजा बोला।

५ **कृत्स्नस्य लोकस्य हितं चरत एव मम इदं शरीरं जरितं अतः विश्रान्तिं अभिरोचये**=( कृत्स्न ) सब लोगोंका हित करते हुए ही मेरा यह शरीर ( जरितं ) बुड्ढा हो गया, इसलिये विश्रांति लेना ( अभिरोचये ) चाहता हूं।

६ **श्रेष्ठः हि मम आत्मजः सर्वैः गुणैः। प्रातः यौवराज्ये तं नियोक्ता अस्मि, तद् अनुमन्यताम्**।=श्रेष्ठ ही है मेरा ( आत्म–जः ) पुत्र सब गुणोंसे। प्रातःकाल यौवराज्य में उसको नियुक्त करनेवाला हूं, उसके लिये अनुमति दें।

७ **ते अपि तं ऊचुः। नृपते ! ते सुतस्य बहवः कल्याणगुणाः। धर्मज्ञः सत्यसंधः शीलवान् अनसूयकः हि असौ**= वे भी उसे बोले। हे राजा ! तेरे ( सुतस्य ) पुत्रके बहुत कल्याणमय गुण हैं। ( असौ ) यह धर्म जाननेवाला, सत्य ( संध ) प्रतिज्ञा करने वाला, शीलवान् तथा ( अन्–असूयकः ) अनिंदक है।

८ **विजितेन्द्रियः अपि सन्, स्वजनवत् पौरान् नित्यं कुशलं पृच्छति**=जितेन्द्रिय ( सन् ) होता हुआ भी, अपने जनोंके समान ( पौरान् ) पुरवासियोंसे नित्य कुशल पूछता है ।

९ **नास्ति तस्य प्रसादः क्रोधश्च कदाचन निरर्थकः**=नहीं है उसकी ( प्रसादः ) प्रसन्नता और क्रोध ( कदाचन ) कभी भी निरर्थक ।

१० **तस्मात् सर्वशत्रुदमनं इमं रामं यौवराज्यस्थं वयं अपि द्रष्टुं इच्छामः**=इस लिये सब शत्रुओंका दमन करनेवाले इस रामको यौवराज्यपर ( स्थं ) बैठे हम भी देखना चाहते हैं ।

११ **तदा राजा दशरथः प्रत्युवाच**=तब राजा दशरथ उत्तर देने लगा ।

१२ **अहो ! प्रीतः अस्मि । रामस्य यौवराज्याय सर्वं एव उपकल्पताम् !**=अहो ! मैं संतुष्ट हूं । राम के यौवराज्य के लिये सब ही सिद्धता होवे ।

१३ **भोः सुमंत्र ! अत्र रामः शीघ्रं आनीयताम्**=हे सुमंत्र ! यहां रामको शीघ्र लाओ ।

१४ **सः अपि तथा इति उक्त्वा रामं तत्र आनयांचक्रे**=उसने भी ठीक ऐसा कहकर रामको वहां लाया ।

१५ **रामः प्रांजलिः प्रणतः पितुः आंतिके अभिप्रेत्य स्वं नाम श्रावितवान्**=रामने ( प्रांजलिः ) हाथ जोड ( प्र—नतः ) नम्रभावसे

( पितुः ) पिताके ( अंतिके ) पास ( अभिप्रेत्य ) जा कर अपना नाम ( श्रावितवान् ) सुनाया ।

१६ **पितुः चरणौ च ववन्दे । तदा राजा तं इदं वचः उवाच**=पिताके चरणों की वन्दना की । तब राजा उसे यह वचन बोला ।

१७ **सदृश्यां पत्न्यां उत्पन्नः गुणज्येष्ठः आत्मजः असि, तस्मात् यौवराज्यं अवाप्नुहि**=तू सदृश धर्मपत्नीमें उत्पन्न, गुणोंसे श्रेष्ठ पुत्र है इस लिये यौवराज्यको प्राप्त हो ।

१८ **हे पुत्र ! ते स्नेहात् हितं वक्ष्यामि**=हे पुत्र तेरे स्नेहसे कल्याण का उपदेश कहता हूं ।

१९ **जितेंद्रियः भव । कामक्रोधसमुत्थितानि व्यसनानि त्यजस्व । यः परोक्षया तथा प्रत्यक्षया अपि वृत्त्या मेदिनीं पालयति, तस्य मित्राणि नन्दन्ति ।**=जितेंद्रिय हो । काम और क्रोधसे उत्पन्न व्यसन छोड दो । जो अप्रत्यक्ष तथा प्रत्यक्ष ( वृत्त्या ) वृत्तिसे ( मेदिनीं ) पृथिवीका पालन करता है, उसके मित्र आनंदित होते हैं ।

## समास ।

संस्कृत में दो अथवा अधिक शब्द इकट्ठे होकर समास बनते हैं और इनमें विशेष अर्थ होता है । इसको समझनेकी पद्धति यह है—

१ **नृपतिः=नृणां पतिः नृपतिः** ( मनुष्योंका पति राजा, नरपति, नरेश )

२ धर्मज्ञः=धर्मं जानाति इति ( धर्मको जो जानता है, धर्मज्ञानी )

३ सर्वशत्रुदमनः=सर्वशत्रूणां दमनः नाशकः ( सब शत्रुओं-का नाशक )

४ गुणज्येष्ठः=गुणैः ज्येष्ठः श्रेष्ठः ( गुणोंसे श्रेष्ठ )

इस रीतिसे पाठक समासों की ओर देखें और उनको समझनेका यत्न करें। यहां जैसा समासोंको संस्कृतमें ही खोलकर बताया है उसी प्रकार आगेभी बताया जायगा।

---

## पाठ ४.

**यदा निवृत्ता राजानो धनुषः सज्जकर्मणः।**
**अथोदतिष्ठद्विप्राणां मध्याज्जिष्णुरुदारधीः॥ १॥**

म. भा. आदि. अ. १९०.

**अन्वय**—यदा राजानः धनुषः सज्जकर्मणः निवृत्ताः अथ विप्राणां मध्यात् उदारधीः जिष्णुः उदतिष्ठत्।

**अर्थ**—जब राजे धनुष्य को सज्ज करनेके कर्मसे निवृत्त हुए, तब विप्रोंके बीचमें से उदार बुद्धिवाला ( जिष्णुः ) अर्जुन उठा।

**उदक्रोशन्विप्रमुख्या विधुन्वन्तोऽजिनानि च।**
**दृष्ट्वा संप्रस्थितं पार्थमिन्द्रकेतुसमप्रभम्॥ २॥**

**अन्वय**—इन्द्रकेतुसमप्रभं पार्थं संप्रस्थितं दृष्ट्वा विप्रमुख्याः अजिनानि विधुन्वन्तः उदक्रोशन् ।

**अर्थ**—( इंद्रकेतु ) बादलके समान प्रभायुक्त अर्जुनको ( संप्रस्थितं ) जाते देखकर मुख्य ब्राह्मण लोग ( अजिनानि ) मृगचर्म ( विधुन्वन्तः ) कंपाते हुए ( उदक्रोशन् ) कोलाहल मचाने लगे ।

**केचिदासन्विमनसः केचिदासन्मुदान्विताः ।**
**आहुः परस्परं केचिन्निपुणा बुद्धिजीविनः ॥ ३ ॥**

**अन्वय**—केचित् विमनसः आसन्, केचित् मुदान्विताः आसन्, केचित् निपुणाः बुद्धिजीविनः परस्परं आहुः ।

**अर्थ**—कोई कोई ( विमनसः ) दुःखी ( आसन् ) हुए, ( केचित् ) कोई ( मुदा—अन्विताः ) आनंदयुक्त हुए, कोई निपुणतायुक्त बुद्धिजीवी विप्र परस्पर बोलने लगे ।

**यत्कर्णशल्यप्रमुखैः क्षत्रियैर्लोकविश्रुतैः ।**
**नानतं बलवद्भिर्हि धनुर्वेदपरायणैः ॥ ४ ॥**
**तत्कथं त्वकृतास्त्रेण प्राणतो दुर्बलीयसा ।**
**बटुमात्रेण शक्यं हि सज्यं कर्तुं धनुर्द्विजाः ॥ ५ ॥**

**अन्वय**—यत् कर्णशल्यप्रमुखैः लोकविश्रुतैः धनुर्वेदपरायणैः बलवद्भिः क्षत्रियैः न आनतं, हे द्विजाः ! तत् धनुः हि कथं अकृतास्त्रेण, प्राणतः दुर्बलीयसा बटुमात्रेण तु सज्यं कर्तुं शक्यं ?

**अर्थ**—जो कर्ण शल्य आदि लोकप्रसिद्ध धनुर्वेद प्रवीण बलवान क्षत्रियोंने नहीं ( आनतं ) नमाया, हे द्विजो ! वह धनु कैसे ( अकृत–अस्त्रेण ) जिसने अस्त्रमें परिश्रम किया नहीं, ऐसे शक्तिसे ही दुर्बल ( बटुमात्रेण ) बालक ने ही सज्ज करनेके लिये शक्य है ?

**अवहास्या भविष्यन्ति ब्राह्मणाः सर्वराजसु ।**
**कर्मण्यस्मिन्नसंसिद्धे चापलादपरीक्षिते ॥ ६ ॥**

**अन्वय**—चापलात् अपरीक्षिते अस्मिन् कर्मणि असंसिद्धे सर्वराजसु ब्राह्मणाः अवहास्याः भविष्यन्ति ।

**अर्थ**—चपलतासे ( अपरीक्षिते ) अनजाने इस कर्ममें ( अ–संसिद्धे ) सिद्धि न मिलनेपर सब राजाओंमें ब्राह्मण हंसी के योग्य बन जांयगे ।

**यद्येष दर्पाद्धर्षाद्वाऽप्यथ ब्राह्मणचापलात् ।**
**प्रस्थितो धनुरायन्तुं वार्यतां साधु मा गमत् ॥ ७ ॥**

**अन्वय**—यदि एषः दर्पात् हर्षात् वा अपि अथ ब्राह्मणचापलात् धनुः आयन्तुं प्रस्थितः, वार्यतां, साधु मा गमत् ।

**अर्थ**—यदि यह ( दर्पात् ) अहंकारसे, हर्षसे अथवा ब्राह्मणों की चपलतासे धनुष्य ( आयन्तुं ) नमानेको ( प्रस्थितः ) जा रहा है, इसको ( वार्यतां ) रोको, भला न जाय ।

## ब्राह्मणाः ऊचुः ।

**नाऽवहास्या भविष्यामो न च लाघवमास्थिताः ।**
**न च विद्विष्टतां लोके गमिष्यामो महीक्षिताम् ॥८॥**

**अन्वय**—ब्राह्मणाः ऊचुः–अवहास्याः न भविष्यामः, लाघवं आस्थिताः च न, लोके महीक्षितां विद्विष्टतां न च गमिष्यामः ।

**अर्थ**—ब्राह्मण बोले कि हम हंसने योग्य नहीं होंगे लघुत्व को ( आस्थिताः ) प्राप्त नहीं होंगे, तथा लोकमें ( महीक्षितां ) राजोंके द्वेषको नहीं प्राप्त होंगे ।

## समास ।

अब इस पाठके श्लोकोंमें आये समासों का विवरण देखिये—

१ **उदारधीः=उदारा धीः बुद्धिः यस्य सः** ( उदार है बुद्धि जिसकी वह )

२ **विप्रमुख्याः=विप्रेषु मुख्याः** ( ब्राह्मणोंमें मुख्य )

३ **इंद्रकेतुसमप्रभः=इंद्रस्य केतुः इंद्रकेतुः मेघः । इंद्रकेतोः समा इंद्रकेतुसमा । इंद्रकेतुसमा प्रभा यस्य सः** ( जिसकी प्रभा इंद्रकेतुके अर्थात् मेघके समान है )

४ **बुद्धिजीविनः=बुद्धिभिः जीवन्ति इति बुद्धिजीविनः** ( बुद्धिसे जीनेवाले )

५ **लोकविश्रुतः=लोके विश्रुतः** ( लोकमें प्रसिद्ध )

६ **धनुर्वेदपरायणः**=धनुषः वेदः धनुर्वेदः। धनुर्वेदे परायणः धनुर्वेदपरायणः ( धनुर्वेदमें प्रवीण )

७ **अपरीक्षितं**=न परीक्षितं अपरीक्षितं ( अनजाना हुआ )

पाठक इन समासोंका अभ्यास करें और अर्थ के अनुसार समास खोलनेका अभ्यास करें। समास यहां संस्कृतमें ही खोले जाते हैं। इस अभ्याससे पाठकों की गति संस्कृतमें अतिशीघ्र होगी।

---

## पाठ ५

पीछले दो पाठोंमें जो संस्कृत वाक्य दिये हैं, उनके संधि बनाकर यहां वाक्य दिये जाते हैं। संस्कृत श्लोकों के अन्वयके संधि भी यहां ही पाठक देखेंगे। यदि पिछले दो पाठ हो चुके हैं तो यह पाठ विना कष्ट समझमें आ जायगा——

**अथ वृद्धस्य राज्ञो दशरथस्यैषा मतिर्बभूव, यज्जीवति मयि रामः कथं राजा स्यात्। तं च समुदितैर्गुणैर्युक्तं समीक्ष्य, सचिवैः सार्धं निश्चित्य च, तस्य यौवराज्यममन्यत। नानानागरिकान् पृथग्जानपदानपि समानिनाय।**

**ततः सर्वां परिषदमामन्त्र्य वसुधाधिप उवाच। कृत्स्नस्य लोकस्य हितं चरत एव ममेदं शरीरं जरितमतो विश्रान्तिमभिरोचये। श्रेष्ठो हि ममात्मजः सर्वैर्गुणैः। प्रातर्यौवराज्ये तं नियोक्ताऽस्मि। तदनुमन्यताम्। इति।**

२

तेऽपि तमूचुः । नृपते ! ते सुतस्य बहवः कल्याणगुणाः । धर्मज्ञः सत्यसंधः शीलवाननसूयको ह्यसौ । विजितेन्द्रियोऽपि सन्स्वजनवत्पौरान् नित्यं कुशलं पृच्छति । नास्ति तस्य प्रसादः क्रोधश्च कदाचन निरर्थकः । तस्मात्सर्वशत्रुदमनमिमं रामं यौवराज्यस्थं वयमपि द्रष्टुमिच्छामः । इति ।

तदा राजा दशरथः प्रत्युवाच । अहो ! प्रीतोऽस्मि ! रामस्य यौवराज्याय सर्वमेवोपकल्पताम् । भोः सुमंत्र ! अत्र रामः शीघ्रमानीयताम् ।

सोऽपि तथेत्युक्त्वा रामं तत्रानयांचक्रे । रामः प्राञ्जलिः प्रणतः पितुरन्तिकेऽभिप्रेत्य स्वं नाम श्रावितवान् । पितुश्चरणौ च ववन्दे । तदा राजा तमिदं वच उवाच ।

सदृश्यां पत्न्यामुत्पन्नो गुणज्येष्ठ आत्मजोऽसि । तस्माद्यौवराज्यमवाप्नुहि । हे पुत्र ! ते स्नेहाद्धितं वक्ष्यामि । जितेन्द्रियो भव । कामक्रोधसमुत्थितानि व्यसनानि त्यजस्व । यः परोक्षया तथा प्रत्यक्षयाऽपि वृत्त्या मेदिनीं पालयति, तस्य मित्राणि नंदन्ति ।

अब श्लोकोंके पाठका संधिसमेत संस्कृत देखिये—

यदा राजानो धनुषः सज्जकर्मणो निवृत्ता अथ विप्राणां मध्यादुदारधीर्जिष्णुरुदतिष्ठत् । इंद्रकेतुसमप्रभं पार्थं संप्रस्थितं दृष्ट्वा विप्रमुख्या अजिनानि विधुन्वन्त उदक्रोशन् ।

केचिन्विमनस आसन्, केचिन्मुदिता आसन्, केचिन्निपुणा बुद्धिजीविनः परस्परमाहुः ।

यत्कर्णशल्यप्रमुखैर्लोकविश्रुतैर्धनुर्वेदपरायणैर्बलवद्भिः क्षत्रियैर्नानतं, हे द्विजाः! तद्धनुर्हि कथमकृतास्त्रेण प्राणतो दुर्बलीयसा बटुमात्रेण तु सज्यं कर्तुं शक्यम्? चापलादपरीक्षितेऽस्मिन् कर्मण्यसंसिद्धे सर्वराजसु ब्राह्मणा अवहास्या भविष्यन्ति। यद्येष दर्पाद्धर्षाद्वाऽप्यथ ब्राह्मणचापलाद्धनुरायन्तुं प्रस्थितो, वार्यतां, साधु मा गमत् ।

ब्राह्मणा ऊचुः—अवहास्या न भविष्यामो, लाघवमास्थिताश्च न, लोके महीक्षितां विद्विष्टतां न च गमिष्यामः ।

दोनों पाठोंका सरल संस्कृत यह है। इसमें संधि बना दिये हैं। पाठक दोचार वार पढेंगे तो उनके मनमें सबका अर्थ आ सकता है तथापि किसी स्थानका अर्थ समझमें न आगया तो वह वाक्य पिछले पाठों में देख सकते हैं ऐसा करनेसे सब शंका निवृत्त हो जायगी। अब यहां कुछ संधि खोल कर बताते हैं—

राज्ञो दशरथस्य=राज्ञः दशरथस्य

दशरथस्यैषा=दशरथस्य एषा

गुणैर्युक्तं=गुणैः युक्तं

पृथग्जानपदान्=पृथक् जानपदान्

विजितेन्द्रियोऽपि=विजितेन्द्रियः अपि

**प्रीतोऽस्मि**=प्रीतः अस्मि

**प्रत्यक्षयाऽपि**=प्रत्यक्षया अपि

अब संस्कृत वाक्योंके अर्थ संस्कृतमेंही देते हैं—

**१ वृद्धस्य राज्ञो दशरथस्यैषा मतिर्बभूव=जरठस्य नृपतेर्दशरथस्यैषा बुद्धिः संजाता ।**

**२ तं च समुदितैर्गुणैर्युक्तं समीक्ष्य, सचिवैः सार्धं निश्चित्य च, तस्य यौवराज्यममन्यत=तं च शोभनैः शुभगुणैर्मंडितं दृष्ट्वा, मंत्रिभिः सह निश्चयं कृत्वा च, तस्य युवराजपदाभिषेचनममन्यत ।**

**३ ते सुतस्य बहवः कल्याणगुणाः=तव पुत्रस्य अनेकाः शोभना गुणाः सन्ति ।**

**४ अहो ! प्रीतोऽस्मि=अहो ! संतुष्टोऽस्मि ।**

**५ यदा राजानो धनुषः सज्जकर्मणो निवृत्ताः=यस्मिन् काले क्षत्रिया धनुष्यस्य सज्यकरणप्रयत्नात् परावृत्ताः ।**

**६ तदा विप्राणां मध्यादुदारधीर्जिष्णुरुदातिष्ठत्=तस्मिन् काले ब्राह्मणानां मध्यादुदारबुद्धिरर्जुन उत्थितवान् ।**

पाठक ये वाक्य वारंवार पढें । संस्कृतकाही अर्थ संस्कृतमें कैसा दिया जाता है और वह कैसा सुगम होता है यह देखें और अनुभव करें । इसको पाठक बहुत वार पढें, बहुत वार पढनेसेही बहुत लाभ होगा ।

---





# पाठ ६

इस पाठमें निम्नलिखित शब्द स्मरण कीजिये—ये अकारान्त पुल्लिंग शब्द हैं, इनके रूप पाठक बना सकते हैं—

| | |
|---|---|
| अंशः=भाग | कालः=समय |
| स्नेहः=मित्रता | अकालः=अयोग्य समय |
| अभ्यासः=अभ्यास | विरोधः=विरोध, झगडा |
| वेदः=वेद | कालज्ञः=समय जाननेवाला |
| जनः=मनुष्य | जलदः=मेघ, बादल |
| उदयः=उदय | आतपः=धूप, सूर्यकिरण |
| समुद्रः=सागर | क्रमः=क्रम |
| क्रोधः=क्रोध, गुस्सा | पराक्रमः=पराक्रम |
| दण्डः=दण्ड | विक्रमः=पराक्रम |
| कर्णः=कान | करः=हाथ |

इन शब्दोंके सातों विभक्तियोंके रूप आप पूर्व बतायी रीतिसे बना सकते हैं। अब ये वाक्य पढिये—

**अयं अध्ययनस्य कालः संजातः**=यह पढनेका समय हुआ है।

**गच्छ स्वकीयं स्थानं, पुस्तकं गृहीत्वा अभ्यासं कुरु**=जा अपने स्थानपर, पुस्तक लेकर अभ्यास कर।

**कारणं विना तेन सह विरोधं मा कुरु**=कारणके विना उसके साथ झगडा न कर।

**सः सूर्यस्य आतपे भ्रमणं करोति**=वह सूर्यकी धूपमें भ्रमण करता है।

**विक्रमयुक्तस्य क्षत्रियस्य सर्वत्र यशः भवति**=पराक्रमी क्षत्रियका सर्वत्र यश होता है।

**आकाशे इदानीं जलदः नास्ति अतः अद्य वृष्टिः न भविष्यति**=आकाशमें अब मेघ नहीं है इसलिये वर्षा नहीं होगी।

**अद्य प्रातः सूर्यस्य यदा उदयः जातः तदा एव त्वया एतत् कर्म कृतं**=आज सबेरे सूर्यका जब उदय हुआ तबही तूने यह कर्म किया।

**दण्डेन सर्पं हन्मि**=दण्डेसे सापको मारता हूं।

**समुद्रस्य जलं क्षारं भवति तथा तडागस्य जलं क्षारं न भवति**=सागरका जल खारा होता है वैसा तालावका जल खारा नहीं होता है।

**क्रोधं कदापि मा कुरु**=गुस्सा कभी न कर।

**स जनः यथा कर्णेन शृणोति तथा त्वं अपि शृणोषि**=वह मनुष्य जैसा कानसे सुनता है वैसा तू भी सुनता है।

**मम एव सनातनः अंशः जीवलोके जीवभूतः**=मेरा ही सनातन अंश जीवलोकमें जीव बना है।

**अस्मिन् मम सहोदरस्नेहः अस्ति एव**=इसमें मेरा (सह-उदर) एक पेटसे जन्म होनेकी मित्रता है हि।

**विद्याभ्यासेन एव मनुष्यस्य उद्धारः भवितुं शक्यः न अन्यथा**=विद्याभ्याससे ही मनुष्य का उद्धार होना शक्य है नहीं दूसरे प्रकारसे।

**कालज्ञः यथाकालं पुरुषार्थं करोति**=समय जाननेवाला योग्य कालमें पुरुषार्थ करता है।

**धर्मज्ञस्य राज्ञः युधिष्ठिरस्य हस्तिनापुरे कदा शासनं आसीत्**=धर्म जाननेवाले राजा युधिष्ठिरका ( हस्तिनापुरे ) देहलीमें कब राज्य-शासन था?

**मंत्रज्ञं मंत्रिवरं आहूय राजा किं करोति**=विचार जाननेवाले मंत्रिश्रेष्ठको बुलाकर राजा क्या करता है?

**यत्र गुरुः वसति तत्र अधुना गच्छ**=जहां गुरु रहता है वहां अब जा।

**तत् भाषणं श्रुत्वा नारदप्रमुखाः सर्वे अपि मुनयः तत्र नैव स्थिताः**=वह भाषण सुनकर नारद आदि सब मुनि वहां नहीं रहे।

**तस्य युद्धस्य अन्ते तव पुत्रः कुत्र गतः**=उस युद्धके अंतमें तेरा पुत्र कहां गया?

**कुलस्य यशोवर्धनः एक एव वीरः पुत्र श्रेयान् भवति न तु कुलघातिनः शतशः पुत्राः**=कुलका यश बढानेवाला एकही वीर पुत्र श्रेयस्कर होता है, परंतु कुलघातक सेंकडों पुत्र नहीं।

**स तथा इति उक्त्वा युद्धाय प्रवृत्तः**=वह ठीक ऐसा कह कर युद्धके लिये प्रवृत्त हुआ।

**तस्मात् यज्ञात् निर्मलं यशः सर्वत्र प्रसृतं**=उस यज्ञसे निर्मल यश सर्वत्र फैला।

**त्वं पायसं पीत्वा पुष्टः भवसि किं ?**=तू पायस पीकर पुष्ट होता है क्या ?

**यदा चैत्रः मासः भवति तदा घर्मः अधिकः एव अस्मिन् देशे भवति**=जब चैत्र महिना होता है तब गर्मी अधिकही इस देशमें होती है।

**यदा राजपुत्रस्य जन्म भवति तदा अत्र महान् उत्सवः भवति**=जब राजपुत्रका जन्म होता है तब यहां बडा उत्सव होता है।

**सः महाबाहुः भीमः गदां गृहीत्वा युद्धाय गतः**=वह महाबाहु भीम गदा लेकर युद्ध के लिये गया।

---

# पाठ ७

१ **मंथरा तु अयोध्यां पुरीं सर्वशृंगारैः उद्भासितां, उच्छ्रितध्वजमालिनीं दृष्ट्वा, परं विस्मयं आगता**=मंथरा तो अयोध्या नगरीको सब ( शृंगारैः ) सजावटोंसे ( उद्भासितां ) तेजस्वी, ( उच्छ्रित ) ऊंचे किये हुए ( ध्वजमालिनीं ) झंडोंकी मालासे युक्त देखकर, बडे ( विस्मयं ) आश्चर्य को प्राप्त होगई।

२ **सा अदूरस्थितां धात्रीं पप्रच्छ**=उसने समीप स्थित दाईसे ( पप्रच्छ ) पूछा।

३ धात्री तु हर्षेण विदीर्यमाणा इव रामस्य यौवराज्याभिषेकवृत्तान्तं मंथरायै आचचक्षे ।=दाई तो हर्षसे फट जानेके समान होकर रामके यौवराज्याभिषेकका वृत्तांत मंथरासे कहने लगी ।

४ श्रुतमात्रेण तु धात्र्याः वचनेन क्षिप्रं अमर्षिता कुब्जा मंथरा=सुनते ही तो दाई के वचनसे ( क्षिप्रं ) तत्काल ( अमर्षिता ) क्रोधित हुई ( कुब्जा ) टेढी मंथरा ।

५ क्रोधेन दह्यमाना इव पापदर्शनी मंथरा शयानां एव कैकेयीं गत्वा इदं अब्रवीत् ।=क्रोधसे जली हुईके समान पापी मंथरा सोनेवाली कैकेयी के पास जाकर यह बोली ।

६ उत्तिष्ठ मूढे ! शेषे किं ? भयं अभिवर्तते त्वां ।=ऊठ मूर्खे ! सोती है क्यों ? भय आया है तेरे प्रति ।

७ दशरथः यौवराज्ये रामं अभिषेक्ष्यति । सा अहं अनलेन दह्यमाना, इव अस्मि, तव हितार्थं अत्र आगता ।=दशरथ यौवराज्यपर रामको अभिषेक करेगा । वह मैं ( अनलेन ) अग्निसे जली हुई के समान हुई हूं, तेरे हितके लिये यहां आई हूं ।

८ हे महिषि ! कथं त्वं राजधर्माणां उग्रत्वं न अवबुध्यसे?=हे रानी ! कैसें तू राजनीति का उग्रत्व नहीं जानती है ?

९ तव भर्ता दशरथः त्वयि अनर्थकं सांत्वं प्रयुंजानः अपि अद्य कौसल्यां अर्थेन एव योजयिष्यति=तेरा पति दशरथ तेरे

लिये निरर्थक शांति का भाषण ( प्रयुंजानः ) करनेवाला आज कौस-ल्याको धनसे ही संयुक्त करेगा।

१० ते भरतं बंधुषु अपवाह्य: श्वः प्रभाते रामं निष्कंटके राज्ये स्थापयिता=तेरे भरतको भाईयोंके पास भेजकर कल प्रातः-काल रामको निष्कंटक राज्यमें स्थापन करेगा।

११ हे कैकेयि ! सा त्वं आत्मनः हितं कुरु इदानीं। त्रायस्व आत्मानं पुत्रं भरतं मां च।=हे कैकेयी ! वह तू अपना हित कर अब। रक्षा कर अपनी पुत्र भरतकी और मेरी।

१२ हर्षपूर्णा शयनात् उत्थिता कैकेयी इदं अब्रवीत्= हर्षसे परिपूर्ण होकर शयनसे उठी कैकेयी यह बोली।

१३ मंथरे ! इदं तु मह्यं त्वया परमं प्रियं आख्यातं=मंथरे ! यह तो मेरे लिये तूने परम प्रिय कहा।

१४ न अहं रामे वा भरते वा विशेषं उपलक्षये=नहीं मैं रामसें अथवा भरतमें विशेष भेद देखती हूं।

१५ मंथरा तु तदा दुःखिता। एनां कैकेयीं उवाच च= मंथरा तो तब दुःखी हुई। इस कैकेयीसे बोली।

१६ बालिशे ! किमर्थं अस्थाने हर्षं कृतवती असि ? शोक-सागरस्य मध्यगता अपि आत्मानं न अवबुध्यसे ?=मूढे ! क्यों ( अस्थाने ) अयोग्य स्थान में हर्ष करती है ? शोकसमुद्र के मध्यमें पहुंची हुई, अपने आपकोभी नहीं जानती ?

**१७ सुभगा किल कौसल्या, यस्याः पुत्रः यौवराज्ये अभिषेक्ष्यते। तां एव कौसल्यां इदानीं दासीवत् त्वं उपस्थास्यसि।**=भाग्यवान निश्चयसे कौसल्या है, जिसका पुत्र यौवराज्यपर अभिषिक्त होगा। उसी कौसल्याके पास अब दासी के समान तू रहेगी।

**१८ ते पुत्रः अपि रामस्य दास्यं कुर्यात्**=तेरा पुत्र रामका दास्य करेगा।

## समास।

अब इस पाठमें कुछ समास देखिये—

**१ अदूरस्थिता=दूरे स्थिता दूरस्थिता। न दूरस्थिता अदूरस्थिता** ( जो नहीं दूर खडी=समीप खडी हुई )

**२ उग्रत्वं=उग्रस्य भावः उग्रत्वं** ( उग्रका गुण उग्रत्व है )

**३ अनर्थकं=न विद्यते अर्थः यस्मिन् अनर्थकं** ( जो धन देनेवाला नहीं, निरर्थक )

**४ हर्षपूर्णा=हर्षेण पूर्णा** ( हर्ष से परिपूर्ण )

**५ अस्थानं=न स्थानं अस्थानं** ( जो स्थान नहीं )

**६ शोकसागरः=शोकस्य सागरः शोकसागरः।** ( शोकका समुद्र )

**७ मध्यगता=मध्ये गता मध्यगता** ( बीचमें प्राप्त )

इस प्रकार समासोंका पाठक अभ्यास करें। समास खोलनेसे उनका अर्थ शीघ्रही ध्यानमें आता है।

---

# पाठ ८

केचिदाहुर्युवा श्रीमान्नागराजकरोपमः ।
पीनस्कंधोरुबाहुश्च धैर्येण हिमवानिव ॥ ९ ॥
सिंहखेलगतिः श्रीमान्मत्तनागेन्द्रविक्रमः ।
संभाव्यमस्मिन्कर्मेदमुत्साहाच्चानुमीयते ॥ १० ॥

महाभारत आदि० १९०

**अन्वय**—केचित् आहुः युवा, श्रीमान्, नागराजकरोपमः, पीनस्कंधोरुबाहुः, धैर्येण हिमवान् इव, सिंहखेलगतिः, श्रीमान्, मत्तनागेन्द्र विक्रमः । उत्साहात् अनुमीयते, इदं कर्म अस्मिन् संभाव्यम् ।

**अर्थ**—कोई बोले कि यह ( युवा ) जवान, श्रीमान, ( नाग-राज-कर-उपमः ) गज राजकी सूंडके समान, ( पीन-स्कंध-ऊरु-बाहुः ) विशाल गर्दन ऊरु और बाहुवाला, धैर्यसे हिमाचल जैसा, सिंहके खेलकी नाईं चालवाला, श्रीमान, उन्मत्त ( नाग-इंद्र-विक्रमः ) गज-श्रेष्ठके समान विक्रमी है । इसके उत्साहसे अनुमान होता है कि यह कर्म इसमें संभवनीय है ।

शक्तिरस्य महोत्साहा न ह्यशक्तः स्वयं व्रजेत् ।
न च तद्विद्यते किंचित्कर्म लोकेषु यद्भवेत् ॥ ११ ॥
ब्राह्मणानामसाध्यं च नृषु संस्थानचारिषु ॥

**अन्वय**—अस्य महोत्साहा शक्तिः । हि अशक्तः स्वयं न व्रजेत् ।

लोकेषु तत् किंचित् कर्म न विद्यते यत् संस्थानचारिषु नृपु ब्राह्मणानां असाध्यं भवेत् ॥

**अर्थ**—इसकी बडी उत्साहकी शक्ति है। ( हि ) क्यों कि अशक्त स्वयंही नहीं जायेगा। लोकोंमें वह कोई भी कर्म नहीं है कि जो ( संस्थानचारिषु ) संघोंमें चलनेवाले मनुष्योंमें ब्राह्मणोंके लिये असाध्य हो।

**अब्भक्षा वायुभक्षाश्च फलाहारा दृढव्रताः ॥ १२ ॥**
**दुर्बला अपि विप्रा हि बलीयांसः स्वतेजसा।**
**ब्राह्मणो नावमंतव्यः सद्सद्वा समाचरन् ॥ १३ ॥**
**सुखं दुःखं महद्र्हस्वं कर्म यत्समुपागतम्।**

**अन्वय**—अब्भक्षाः, वायुभक्षाः, फलाहाराः, दृढव्रताः, दुर्बला अपि विप्राः हि स्वतेजसा बलीयांसः। सत् असत्, सुखं दुःखं, महत् ह्रस्वं, यत् समुपागतं कर्म वा समाचरन् ब्राह्मणः न अवमंतव्यः।

**अर्थ**—( अप्-भक्षाः ) जल भक्षण करनेवाले, वायु भक्षण करनेवाले, फलभोज करनेवाले, दृढव्रती, दुर्बल भी ब्राह्मण हुआ तो भी अपने तेजसे बलवान ही होते हैं। इस कारण भला बुरा सुखदाई दुःखदाई, बडा छोटा जो कोई ( समुपागतं ) प्राप्त कर्म हो उसको ( समाचरन् ) करनेवाले ब्राह्मण का अवमान नहीं करना चाहिये।

**जामदग्न्येन रामेण निर्जिताः क्षत्रिया युधि ॥ १४ ॥**
**पीतः समुद्रोऽगस्त्येन अगाधो ब्रह्मतेजसा ॥**

**अन्वय**—जामदग्न्येन रामेण युधि क्षत्रियाः निर्जिताः। ब्रह्मतेजसा अगस्त्येन अगाधः समुद्रः पीतः।

**अर्थ**—जमदग्निपुत्र परशुरामने युद्धमें क्षत्रियोंका ( निर्जिताः ) पराभव किया। ब्रह्मतेजसे तेजस्वी अगस्त्यने अगाध समुद्र ( पीतः ) पीया था !

**तस्माद् ब्रुवन्तु सर्वेऽत्र बटुरेष धनुर्महान् ॥१५॥**
**आरोपयतु शीघ्रं वै तथेत्यूचुर्द्विजर्षभाः॥**

**अन्वय**—तस्मात् सर्वे अत्र ब्रुवन्तु एष महान् बटुः धनुः शीघ्रं आरोपयतु वै। द्विजर्षभाः तथा इति ऊचुः।

**अर्थ**--इसलिये सब यहां ( ब्रुवन्तु ) बोलें कि यह बडा युवक धनुपर शीघ्र गुण चढावे ही। ब्राह्मणश्रेष्ठोंने वैसा हो ऐसा कहा।

**एवं तेषां विलपतां विप्राणां विविधा गिरः॥ १६॥**
**अर्जुनो धनुषोऽभ्याशे तस्थौ गिरिरिवाचलः।**

**अन्वय**—विविधाः गिरः एवं विलपतां तेषां विप्राणां अर्जुनः धनुषः अभ्याशे गिरिः इव अचलः तस्थौ।

**अर्थ**—विविध ( गिरः ) भाषण इस प्रकार ( विलपता ) बोलनेवाले उन ब्राह्मणों के बीचमेंसे अर्जुन धनुष्यके निकट ( गिरिः ) पर्वत के समान ( अ-चल ) स्थिर ( तस्थौ ) खडा हुआ।

**समास।**

इस पाठमें आये हुए समासोंका परिचय अब किया जाता है—

१ नागराजकरोपमः=नागानां राजा नागराजः। नागराजस्य करः नागराज करः। नागराजकरस्य उपमा यस्य सः नागराजकरोपमः। ( हाथियोंमें से श्रेष्ठ हाथिकी सूंडकी उपमा है जिसको )

२ पीनस्कंधोरुबाहुः=स्कंधः च ऊरू च बाहू च स्कंधोरुबाहवः। पीनाः स्कंधोरुबाहवः यस्य सः पीनस्कंधोरुबाहुः।= ( जिसके कंधे ऊरु और बाहु विशाल है )

३ मत्तनागेंद्रविक्रमः=नागानां इंद्रः नागेन्द्रः। मत्तः च असौ नागेन्द्रः च मत्तनागेन्द्रः। मत्तनागेन्द्रस्य विक्रमः इव विक्रमः यस्य सः। ( उन्मत्त गजराज के समान विक्रमी )

४ अशक्तः=न शक्तः ( शक्तिरहित )

५ दृढव्रतः=दृढं व्रतं यस्य सः ( दृढ नियमवाला )

इस पाठके श्लोकोंमें कई और भी समास हैं। सब यहां दिये नहीं हैं। जो दिये हैं उनको ही वारंवार पाठक पढें। वारंवार पढनेसे ही समासका तत्त्व समझनेका ज्ञान प्राप्त हो सकता है। इसलिये समासका विवरण जो संस्कृतमें दिया है वह वारंवार पढें।

---

# पाठ ९.

गत दो पाठोंमें जो संस्कृत वाक्य दिये हैं उनके संधि बनाकर सरल संस्कृत वाक्य इस पाठमें देते हैं—

मंथरा त्वयोध्यां पुरीं सर्वशृंगारैरुद्भासितामुच्छ्रितध्वजमालिनीं दृष्ट्वा परं विस्मयमागता। साऽदूरस्थितां धात्रीं पप्रच्छ। धात्री तु हर्षेण विदीर्यमाणेव रामस्य यौवराज्याभिषेकवृत्तान्तं मंथराया आचचक्षे। श्रुतमात्रेण तु धात्र्या वचनेन क्षिप्रममर्षिता कुब्जा मंथरा। क्रोधेन दह्यमानेव मंथरा पापदर्शिनी शयानामेव कैकेयीं गत्वेदानीमिदमब्रवीत्।

उत्तिष्ठ मुढे ! शेषे किम् ? भयमभिवर्तते त्वाम्। दशरथो यौवराज्ये राममभिषेक्ष्यति। साहमनलेन दह्यमानेवास्मि। तव हितार्थमत्रागता। हे महिषि ! कथं त्वं राजधर्माणामुग्रत्वं नावबुध्यसे ? तव भर्ता दशरथस्त्वय्यनर्थकं सान्त्वं प्रयुंजानोऽप्यद्य कौसल्यामर्थेनैव योजयिष्यति। ते भरतं बंधुष्वपवाह्य श्वः प्रभाते रामं निष्कंटके राज्ये स्थापयिता।

हे कैकयि ! सा त्वमात्मनो हितं कुर्विदानीम्। त्रायस्वात्मानं पुत्रं भरतं मां च। हर्षपूर्णा शयनादुत्थिता कैकयीदमब्रवीत्। मंथरे इदं तु मह्यं त्वया परमं प्रियमाख्यातम्। नाहं रामे वा भरते वा विशेषमुपलक्षये।

मंथरा तु तदा दुःखिता। एनां कैकेयीमुवाच च। बालिशे किमर्थमस्थाने हर्षं कृतवत्यसि ? शोकसागरस्य मध्यगतामप्यात्मानं नावबुध्यसे। सुभगा किल कौसल्या, यस्याः पुत्रो यौवराज्येऽभिषेक्ष्यते। तामेव कौसल्यामिदानीं दासीवत्त्वमुपस्थास्यति। ते पुत्रोऽपि रामस्य दास्यं कुर्यात्।

अब पूर्व पाठके श्लोकोंके अन्वयका संधियुक्त संस्कृत देखिये—

**केचिदाहुर्युवा श्रीमान्नागराजकरोपमः पीनस्कंधोरुबाहुधैर्येण हिमवानिव सिंहखेलगतिर्मत्तनागेन्द्रविक्रमः । उत्साहादनुमीयत, इदं कर्म अस्मिन्संभाव्यम् ।**

**अस्य महोत्साहा शक्तिः । ह्यशक्तः स्वयं न व्रजेत् । लोकेषु तत्किंचित्कर्म न विद्यते यत्संस्थानचारिषु नृषु ब्राह्मणानामसाध्यं भवेत् ।**

**अब्भक्षा वायुभक्षाः फलाहारा दृढव्रता दुर्बला अपि विप्रा हि स्वतेजसा बलीयांसः । सदसत् सुखं दुःखं महद्भ्रस्वं यत्समुपागतं कर्म वा समाचरन् ब्राह्मणो नावमंतव्यः ।**

**जामदग्न्येन रामेण युधि क्षत्रिया निर्जिताः । ब्रह्मतेजसाऽगस्त्येनागाधः समुद्रः पीतस्तस्मात्सर्वेऽत्र ब्रुवन्त्वेष महान्वटुर्धनुः शीघ्रमारोपयतु वै । द्विजर्षभास्तथेत्यूचुः ।**

**विविधा गिर एवं विलपतां तेषां विप्राणामर्जुनो धनुष अभ्याशे गिरिरिवाचलस्तस्थौ ।**

पूर्वोक्त दोनों पाठोंका सरल संस्कृत यह है । इसमें संधि किये गये हैं । पाठक दोचार वार पढेंगे तो उनको यह भी समझमें आ जायगा । यदि किसी स्थानपर समझमें नहीं आया तो वे उस वाक्य को पूर्व पाठमें देखकर उसका अर्थ जान सकते हैं । अब थोडेसे संधि खोलकर बताये जाते हैं——

**शृंगारैरुद्भासिता**=शृंगारैः उद्भासिता।

**दह्यमानेव**=दह्यमाना इव।

**गत्वेदानीं**=गत्वा इदानीं।

**त्वय्यनर्थकं**=त्वयि अनर्थकं।

**बंधुष्वपवाह्य**=बंधुषु अपवाह्य।

**कैकेयीदमब्रवीत्**=कैकेयी इदं अब्रवीत्।

**कृतवत्यसि**=कृतवती असि।

**केचिदाहुः**=केचित् आहुः।

अब कुछ संस्कृत वाक्योंका अर्थ संस्कृतमें ही दिया जाता है—

१ **साऽदूरस्थितां धात्रीं पप्रच्छ=सा समीपस्थां उपमातरं अपृच्छत्।**

२ **उत्तिष्ठ मूढे=उत्तिष्ठ मूर्खे।**

३ **साहमनलेन दह्यमानेवास्मि=सा अहं अग्निना ज्वलिता इव अस्मि।**

४ **सा त्वमात्मनो हितं कुर्विदानीं=सा त्वं स्वकीयं मंगलं विधेहि अधुना।**

५ **इदं तु मह्यं त्वया परमं प्रियमाख्यातं=एतत् तु मह्यं त्वया अत्यंतं प्रीतिकरं कथितं।**

६ **शोकसागरस्य मध्यगतामप्यात्मानं नावबुध्यसे=दुःखसमुद्रस्य अंतर्गतां अपि आत्मानं न जानासि।**

**७ ते पुत्रोऽपि रामस्य दास्यं कुर्यात्=तव सुतः अपि रामचंद्रस्य सेवां कुर्यात् ।**

इस प्रकार संस्कृतका अर्थ संस्कृतमें करनेसे आपका संस्कृतके साथ परिचय बहुत ही बढ जायगा। इसलिये पाठक इसको वारंवार पढें ।

---

## पाठ १०

अब इस पाठमें निम्नलिखित अकारान्त पुल्लिंग शब्दोंका अभ्यास कीजिये—

**व्यवहारः**=व्यापार
**यवः**=जौं
**उपयोगः**=उपयोग
**अभियोगः**=लगना, मुकदमा, युद्ध
**दिवाकरः**=सूर्य
**न्यासः**=रखना
**वत्सः**=बछडा
**बालः**=बालक
**गंधः**=गंध, सुगंध
**स्पर्शः**=स्पर्श
**संयोगः**=संयोग
**दरिद्रः**=दरिद्री, निर्धन
**पुरुषः**=पुरुष
**पुरुषोत्तमः**=पुरुषोंमें उत्तम
**प्रणयः**=प्रीति, मित्रता
**दम्भः**=ढोंग
**स्वेदः**=पसीना
**कंटकः**=कांटा
**संस्कारः**=संस्कार
**रसः**=रस
**भेदः**=भेद
**दीपः**=दीप

अकारान्त पुल्लिंग शब्दोंके सातों विभक्तियोंके रूप बनाना पाठक जानते ही हैं। अतः वे इन शब्दोंके रूप बनाकर विविध वाक्य बना सकते हैं।

**व्यवहारे कुशलः पुरुषः विजयं प्राप्नोति**=व्यवहार में कुशल मनुष्य विजय प्राप्त करता है।

**सः दिने यवान् रात्रौ च व्रीहीन् भक्षयति**=वह दिनमें जौ और रात्रीमें चावल खाता है।

**यः बलस्य उपयोगं जानाति सः एव श्रेष्ठः भवति न अन्यः**=जो बलका उपयोग जानता है वही श्रेष्ठ होता है, दूसरा नहीं।

**त्वया तेन सह किमर्थं अभियोगः कृतः?**=तूने उससे किस लिये युद्ध किया?

**राष्ट्रस्य उद्धाराय सर्वस्वस्य न्यासः कर्तव्यः एव**=राष्ट्रके उद्धारके लिये सर्वस्वका न्यास करनाही चाहिये।

**स बालः भूत्वा वृद्धः इव वदति**=वह बालक होकर भी वृद्धके समान बोलता है।

**तं गोवत्सं इदानीं अत्र आनय**=उस गोवत्सको अब यहां ला।

**तस्य पुष्पस्य गंधः शोभनः अस्ति**=उस फूलका गंध उत्तम है।

**यदा पिता बालकं पश्यति तदा सुखी भवति**=जब पिता बालकको देखता है तब सुखी होता है।

**एष पूर्वमार्गेण सह पश्चिममार्गस्य संयोगः अस्ति**=यह मार्गके साथ पश्चिममार्गका संयोग है ।

**दरिद्रः पुरुषः धनहीनः भवति**=दरिद्र मनुष्य धनहीन होता है।

**पुरुषस्य भाग्यं देवः न जानाति कुतः मनुष्यः ?**=पुरुषका भाग्य देव नहीं जानता, कैसे मनुष्य जानेगा ?

**पुरुषः पुरुषोत्तमस्य उपासनां करोतु**=पुरुष पुरुषश्रेष्ठकी उपासना करे।

**दंभेन मनुष्यस्य अधःपातः भवति**=ढोंगसे मनुष्यका अधःपात होता है ।

**ग्रीष्मकाले मनुष्यस्य शरीरात् स्वेदः निःसरति**=ग्रीष्म कालमें मनुष्यके शरीरसे पसीना निकलता है ।

**यदि वृक्षस्य कंटकः पादे प्रविशति तर्हि कंटकेन एव सः वहिः निःसार्यः ।**=यदि वृक्षका कांटा पांवमें प्रवेश करता है, तो कांटेसेही वह बाहर निकालने योग्य है ।

**संस्कारेण हीनः शूद्रः । संस्कारेण एव द्विजः भवति**=संस्कारसे हीन शूद्र । संस्कारसेही द्विज होता है ।

**फलानां मधुरः रसः एव पेयः**=फलोंका मधुर रसही पीनें योग्य है ।

**भेद एव युद्धस्य मूलं अस्ति**=भेदही लढाईका मूल है ।

**अंधकारे दीपः एव मार्गं दर्शयति**=अंधकारमें दीपही मार्ग बताता है ।

**अन्नस्यार्धभागं शूद्राय स ददाति**=अन्नका आधा भाग वह शूद्रको देता है।

**वाक्य।**

**यथा शूद्रः अन्नं खादति तथा एव इतरः जनः भोजनं करोति। गांधारी दुर्योधनं पुत्रं अजनयत्। कुंती च युधिष्ठिरं पुत्रं अजनयत्। राजा सैनिकान् दूरतः विसृज्य आश्रमं गच्छति। तस्य शब्दं श्रुत्वा राक्षसी तत्र एव आगता। पूजितः मुनिः इदं वचनं अब्रवीत् यत् सत्यं एव परमः धर्मः इति। सा कन्या तस्मिन् एव आश्रमे विद्याध्ययनादिकं समाप्य स्वगृहं आगता। तेन राज्ञा तस्मै जनाय धनं दत्तं, तत् धनं गृहीत्वा सः देशान्तरं गतः तत्र विद्याध्ययनं कर्तुम्। ज्ञानात् एव बंधनात् मुक्तिः भवति, तथा कर्मकरणात् अपि भवति।**

---

## पाठ ११

**१ एवं तु उक्ता कैकेयी क्रुद्धा बभूव। अब्रवीत् च मंथरां। रामं वनं अद्य क्षिप्रं प्रस्थापयामि**=इसप्रकार कहनेपर कैकेयी क्रुद्ध होगई। और बोली मंथरा को। रामको वनमें आज शीघ्र भेजूंगी।

**२ भरतं एव यौवराज्ये अभिषेचये। एतत् तु संपश्य केनापि उपायेन साधय इदम्**=भरत को ही यौवराज्यपर अभिषेक करूंगी। यह तो देखकर किसी उपाय से सिद्ध कर यह।

३ पापदर्शिनी मंथरा अपि रामार्थं उपहसन्तीं कैकेयीं अब्रवीत् । हन्त इदानीं पश्य यथा ते भरतः राज्यं प्राप्स्यति=पापी मंथरा भी रामके कारण उपहास करनेवाली कैकेयी से बोली । अजी अब देख कैसा तेरा भरत राज्य प्राप्त करेगा ।

४ पुरा देवासुरयुद्धे ते पतिः देवराजस्य सहाय्यं अकरोत्= प्राचीन समयमें देव और असुरों के युद्धमें तेरा पति देवराजकी सहाय्यता करता रहा ।

५ तदा त्वां एव उपादाय गत आसीत्=तुझे ही लेकर गया था ।

६ शंबरासुरेण तत्र राजा महायुद्धं अकरोत्=शंबरासुरसे वहा राजाने बडा युद्ध किया ।

७ यदा असुरैः शस्त्रैः शकलीकृतः राजा अभवत् तदा त्वया एव तत्र रक्षितः=जब असुरोंने शस्त्रोंसे राजा जर्जरित किया तब तूनेही वहां रक्षित किया ।

८ तुष्टेन तदा तेन राज्ञा द्वौ वरौ ते दत्तौ–संतुष्ट हुए उस राजाने दो वर तेरे लिये दिये ।

९ सः च त्वया उक्तः । यदा इच्छेयं तदा गृह्णीयाम् इति ।= उसे तुमने कहा । कि जब इच्छा करूंगी तब लूंगी ।

१० याचस्व अधुना तौ वरौ । भरतस्य अभिषेचनं रामस्य प्रव्राजनं वर्षाणि चतुर्दश, इति रूपौ द्वौ वरौ ।=मांग अब वे

दो वर । भरत का राज्याभिषेक और रामको बाहर भेजना चौदह वर्ष ये दो वर ।

**११ तावता हि कालेन स्थिरो भविष्यति पुत्रः ते प्रजाभावगतस्नेहः**=उतने ही समयसे स्थिर हो जायगा पुत्र तेरा प्रजाके स्नेहसे ।

**१२ पश्चात् कैकेयी एवं प्रोत्साहिता आभरणानि मुक्त्वा क्रोधागारं प्रविश्य भूमौ एव निपतिता**=पश्चात् कैकेयी इस प्रकार प्रोत्साहित होकर आभूषण फेंक कर क्रोधागारमें प्रविष्ट हो, भूमी परही पडी रही ।

**१३ महाराजः दशरथः प्रियार्हां प्रियं आख्यातुं कैकेय्याः अंतःपुरं प्रविवेश**=महाराज दशरथ प्रियके लिये योग्य कैकेयीको प्रिय ( आख्यातुं ) कहनेके लिये कैकेयी के अंतःपुरमें प्रविष्ट हुआ।

**१४ शयनोत्तमे तां न ददर्श सः। न हि तस्य तां वेलां देवी पुरा अत्यवर्तत ।**=शयनके लिये उत्तम मंदिरमें उसे नहीं देखा उसने। नहीं उसके उस समय का देवी पहिले अतिक्रमण करती थी ।

**१५ प्रतीहारी तु कृतांजलिः उवाच। देव ! देवी भृशं क्रुद्धा अभिद्रुता क्रोधागारम् ।**=प्रतीहारी तो हाथ जोडकर बोली, हे ( देव ) राजा ! देवी वहुत क्रोधित हुई है और ( अभिद्रुता ) गई है क्रोधशाला में ।

१६ अपापः राजा पापसंकल्पां तां कैकेयीं धरणीतले ददर्श=निष्पाप राजाने पापसंकल्पी उस कैकेयी को भूमिके ऊपर पडी देखी।

१७ स तां उवाच, किमर्थं भूमौ शेषे?=वह उसे बोला, किसलिये भूमीपर सोती है?

१८ कैकेयी उवाच–प्रतिजानीष्व, प्रतिज्ञां यदि कर्तुं इच्छसि=कैकेयी बोली–( प्रतिजानीष्व ) प्रतिज्ञा कर, यदि प्रतिज्ञा पूर्ण करना चाहता है।

१९ अनंतरं ते व्याहरिष्यामि यथा मम अभिप्रार्थितम्=पश्चात् तुझे कहूंगी जैसी मेरी इच्छा है।

## समास।

१ देवासुरयुद्धं=देवाः च असुराः च देवासुराः देवासुराणा युद्धं देवासुरयुद्धं ( देव और असुरों का युद्ध )

२ देवराजः=देवानां राजा देवराजः ( देवोंका राजा )

३ शंबरासुरः=शंबरः च असौ असुरः च शंबरासुरः ( शंबर नामक असुर )

४ क्रोधागारं=क्रोधस्य अगारं क्रोधागारं ( क्रोधभवन )

५ प्रजाभावगतस्नेहः=प्रजायाः भावः प्रजाभावः। प्रजाभावे गतस्नेहः ( प्रजाभावके प्राप्त स्नेहसे युक्त )

६ शयनोत्तमं=शयनाय उत्तमं ( शयनके लिये उत्तम )

७ कृतांजलिः=कृता अंजलिः येन स कृताञ्जलिः ( हाथ-जोड़े हुए )

इस रीतिसे पाठक समासोंका ज्ञान प्राप्त करें।

---

## पाठ १२

**स तद्धनुः परिक्रम्य प्रदक्षिणमथाकरोत् ॥ १७ ॥**
**प्रणम्य शिरसा देवमीशानं वरदं प्रभुम् ।**
**कृष्णं च मनसा ध्यात्वा जगृहे चार्जुनो धनुः ॥१८॥**

म. भा. आदि. अ. १९०

**अन्वय**—अथ सः तत् धनुः परिक्रम्य प्रदक्षिणं अकरोत् । शिरसा देवं ईशानं वरदं प्रभुं प्रणम्य । मनसा कृष्णं च ध्यात्वा अर्जुनः धनुः जगृहे ।

**अर्थ**—अब उसने उस धनुष्यके (परिक्रम्य) चारों ओर परिक्रमा की सिरसे देव ईश्वर वर दाता प्रभु को प्रणाम कर । और मनसे कृष्ण का ध्यान करके अर्जुन ने धनुष्यको ( जगृहे ) लिया, पकडा ।

**चैलानि विव्यधुस्तत्र ब्राह्मणाश्च सहस्रशः ।**
**विलक्षितास्ततश्चक्रुर्हाहाकारांश्च सर्वशः ॥ २३ ॥**

**अन्वय**—सहस्रशः ब्राह्मणाः तत्र चैलानि विव्यधुः ततः विलक्षिताः सर्वशः हाहाकारान् च चक्रुः ।

**अर्थ**—सहस्त्रों ब्राह्मण वहां अपने ( चैलानि ) दुपट्टों को ( विव्यधुः ) उडाने लगे। उससे ( विलक्षिताः ) विलक्षण अर्थात् जो वैसा कर नहीं सके थे वे सब प्रकार से हाय हाय ( चक्रुः ) करने लगे।

**न्यपतंश्चात्र नभसः समन्तात्पुष्पवृष्टयः।**
**शताङ्गानि च तूर्याणि वादकाः समवादयन् ॥ २४ ॥**

**अन्वय**—अत्र च नभसः समन्तात् पुष्पवृष्टयः न्यपतन्। वादकाः शतांगानि च तूर्याणि समवादयन्।

**अर्थ**—यहां ( नभसः ) आकाशसे ( समन्तात् ) चारों ओर से फूल की वृष्टि ( न्यपतन् ) पडने लगी अर्थात् हो गई। बाजेवाले सैंकडों अंगोंसे युक्त ( तूर्य ) ढोल आदि वाद्य ( समवादयन् ) बजाने लगे।

**सूतमागधसंघाश्चाऽप्यस्तुवंस्तत्र सुस्वराः।**
**तं दृष्ट्वा द्रुपदः प्रीतो बभूव रिपुसूदनः।**
**सह सैन्यैश्च पार्थस्य साहाय्यार्थमियेष सः॥२५॥**

**अन्वय**—अत्र सूतमागधसंघाः च अपि सुस्वराः अस्तुवन्। तं दृष्ट्वा रिपुसूदनः द्रुपदः प्रीतः बभूव। सैन्यैः च सह सः पार्थस्य साहाय्यार्थं इयेष।

**अर्थ**—यहां सूत और मागधोंके संघ सुस्वरसे ( अस्तुवन् ) स्तुति करने लगे। उसे देखकर ( रिपुसूदनः ) शत्रुनाशी द्रुपद ( प्रीतः ) संतुष्ट हुआ। सैन्योंके साथ उसने ( पार्थस्य ) अर्जुनकी सहायता करनेकी ( इयेष ) इच्छा की।

**तस्मै दित्सति कन्यां तु ब्राह्मणाय तदा नृपे ।**
**कोप आसीन्महीपानामालोक्यान्योन्यमन्तिकात्१॥**

म. भा. आदि. १९१

**अन्वय**—तदा तस्मै ब्राह्मणाय कन्यां दित्सति नृपे अन्योन्यं आलोक्य महीपानां क्रोधः आसीत् ।

**अर्थ**—तब उस ब्राह्मणको कन्या ( दित्सति ) दान करनेकी ( नृपे ) राजकी इच्छा जानकर, परस्पर को ( आलोक्य ) देखकर ( मही–पानां ) राजाओंका क्रोध ( आसीत् ) था, हो गया । अर्थात् राजे बडे क्रुद्ध हुए ।

**अस्मानयमतिक्रम्य तृणीकृत्य च संगतान् ।**
**दातुमिच्छति विप्राय द्रौपदीं योषितां वराम् ॥२॥**

**अन्वय**—अस्मान् संगतान् तृणीकृत्य अतिक्रम्य च अयं योषितां वरां द्रौपदीं विप्राय दातुं इच्छति ।

**अर्थ**—हम ( संगतान् ) मिले हुओंको तिनके के समान समझकर और ( अतिक्रम्य च ) उल्लंघन करके ( अयं ) यह ( योषितां ) स्त्रियोंमें ( वरां ) श्रेष्ठ द्रौपदीको ( विप्राय ) ब्राह्मणको देनेकी इच्छा करता है ।

**अवरोप्येह वृक्षं तु फलकाले निपात्यते ।**
**निहन्मैनं दुरात्मानं योऽयमस्मान्न मन्यते ॥ ३ ॥**

**अन्वय**—इह वृक्षं अवरोप्य तु फलकाले निपात्यते । यः अस्मान् न मन्यते । एनं दुरात्मानं निहन्मः ।

अर्थ—यहा वृक्षका रोपण करके फलने के कालमें ( निपात्यते ) काट रहा है। जो हमको नहीं मानता। इस दुरात्माको ( निहन्म ) मार डालेंगे।

समास।

१ वरदः=वरं ददाति इति ( वर देनेवाला )
२ पुष्पवृष्टिः=पुष्पाणां वृष्टिः ( फूलोंकी वृष्टि )
३ शतांगं=शतानि अंगानि यस्य ( सौ अंग हैं जिसके )
४ वादकः=वादयति इति ( जो बजाना करता है )
५ सूतमागधसंघाः=सूताः च मागधाः च सूतमागधाः। सूत मागधानां संघाः सूतमागधसंघाः। ( सूत और मागधोंके संघ )
६ रिपुसूदनः=रिपोः सूदनः ( शत्रुका घातक )
७ महीपः=महीं पाति इति ( पृथ्वीका पालक )
८ फलकालः=फलस्य कालः ( फलका समय )
९ दुरात्मा=दुष्टः आत्मा यस्य ( दुष्ट आत्मा जिसका )

पाठक ये समास के विवरण वारंवार पढके ठीक समझनेका यत्न करें।

---

## पाठ १३

पूर्व दो पाठों में जो संस्कृत के वाक्य दिये हैं उनका संधियुक्त सरल संस्कृत अत्र दिया जाता है—

**एवं तूक्ता कैकेयी क्रुद्धा बभूव। अब्रवीच्च मंथराम्। रामं**

वनमद्य क्षिप्रं प्रस्थास्यामि। भरतमेव यौवराज्येऽभिषेचये।
एतत्तु संपश्य केनोपायेन साधयेदम्।

पापदर्शिनी मंथराऽपि रामार्थमुपहसन्तीं कैकेयीमब्रवीत्।
हन्तेदानीं पश्य यथा ते भरतो राज्यं प्राप्स्यति।

पुरा देवासुरयुद्धे ते पतिर्देवराजस्य सहाय्यमकरोत्। तदा त्वामेवोपादाय गत आसीत्। शंबरासुरेण तत्र राजा महायुद्धमकरोत्। यदाऽसुरैः शस्त्रैः शकलीकृतो राजाऽभवत्तदा त्वयैव तत्र रक्षितः। तुष्टेन तदा तेन राज्ञा द्वौ वरौ ते दत्तौ। स च त्वयोक्तः। यदेच्छेयं तदा गृह्णीयामिति। याचस्वाधुना तौ वरौ भरतस्याभिषेचनं रामस्य प्रव्राजनं वर्षाणि चतुर्दशेति रूपौ द्वौ वरौ। तावता हि कालेन स्थिरो भविष्यति पुत्रस्ते प्रजाभावगतस्नेहः।

पश्चात्कैकेय्येवं प्रोत्साहिताऽऽभरणानि मुक्त्वा क्रोधागारं प्रविश्य भूमावेव निपतिता।

महाराजो दशरथः प्रियार्हां प्रियमाख्यातुं कैकेय्या अंतःपुरं प्रविवेश। शयनोत्तमे तां न ददर्श सः। नहि तस्य तां वेलां देवी पुराऽवत्यर्तत।

प्रतीहारी तु कृताञ्जलिरुवाच। देव! देवी भृशं क्रुद्धा अभिद्रुता क्रोधागारम्।

अपापो राजा पापसंकल्पां तां कैकेयीं धरणीतले ददर्श। स तामुवाच। किमर्थं भूमौ शेषे?

कैकेय्युवाच—प्रतिजानीष्व प्रतिज्ञां यदि कर्तुमिच्छसि। अनंतरं ते व्याहरिष्यामि यथा ममाभिप्रार्थितम्। इति।

अब श्लोकों के पाठका संधियुक्त सरल संस्कृत देखिये—

अथ स तद्धनुः परिक्रम्य प्रदक्षिणमकरोत्। शिरसा देवमीशानं वरदं प्रभुं प्रणम्य। मनसा कृष्णं च ध्यात्वाऽर्जुनो धनुर्जगृहे। तदा सहस्रशो ब्राह्मणास्तत्र चैलानि विव्यधुः। ततो विलक्षिताः सर्वशो हाहाकारांश्च चक्रुः।

अत्र च नभसः समन्तात्पुष्पवृष्टयो न्यपतन्। वादकाः शतांगानि च तूर्याणि समवादयन्।

अत्र सूतमागधसंघाश्चापि सुस्वरा अस्तुवन्। तं दृष्ट्वा रिपुदमनो द्रुपदः प्रीतो बभूव। सैन्यैश्च सह स पार्थस्य साहाय्यार्थमियेष।

तदा तस्मै ब्राह्मणाय कन्यां दित्सति नृपेऽन्योन्यमालोक्य महीपानां क्रोध आसीत्। अस्मान्संगतांस्तृणीकृत्यातिक्रम्य चायं योषितां वरां द्रौपदीं विप्राय दातुमिच्छति इह वृक्षमवरोप्य तु फलकाले निपात्यते। योऽस्मान्न मन्यते। एनं दुरात्मानं निहन्म।

## संधि।

अब इस पाठके कुछ संधियोंको खोल कर बताया जाता है—

अब्रवीच्च=अब्रवीत् च

यौवराज्येऽभिषे०=यौवराज्ये अभिषे०

केनोपायेन=केन उपायेन

पतिर्देवराजस्य=पतिः देवराजस्य

त्वामेवोपादाय=त्वा एव उप–आदाय

यदेच्छेयं=यदा इच्छेयं

शयनोत्तमे=शयन–उत्तमे ।

अपापो राजा=अपापः राजा ।

कैकेय्युवाच=कैकेयी उवाच ।

अत्र संस्कृतका अर्थ संस्कृतमेंही दिया जाता है इसका अभ्यास पाठक अच्छी प्रकार करें—

१ रामं वनमद्य क्षिप्रं प्रस्थापयामि=रामचंद्रं अरण्यं आस्मिन्दिने शीघ्रं प्रेषयिष्यामि ।

२ हन्तेदानीं पश्य यथा ते भरतो राज्यं प्राप्स्यति=शोभनं अधुना अवलोकय येन उपायेन तव भरतः राज्यं अवाप्स्यति ।

३ पुरा देवासुरयुद्धे ते पतिः देवराजस्य सहाय्यमकरोत्=पूर्वं सुरासुरसंग्रामे तव भर्ता सुरपतेः सहायतां कृतवान् ।

४ तदा त्वामेवोपादाय गत आसीत्=तस्मिन् समये त्वां गृहीत्वा एव स गतवान् ।

५ तुष्टेन तदा तेन राज्ञा द्वौ वरौ ते दत्तौ=संतोषितेन तस्मिन्समये त्वां तेन भूपेन द्वौ वरौ तुभ्यं दत्तौ ।

६ मनसा कृष्णं ध्यात्वार्जुनो धनुर्जगृहे=हृदयेन वासुदेवं ध्यात्वा पार्थः धनुष्यं गृहीतवान् ।

पाठक इसका अच्छा अभ्यास करें ।

---

